निन्दयेत्यर्थः। न भे पादरजसा तुल्य इत्यधिक्षिप्तः (माल० १) **अधिक्षिप्तोऽवमानितः।** श्रीनिकेतम्...अधिक्षिपत् (वदनारविन्दम्) (भा० पु० ३।२८।३०)। **अधिक्षिपत् उपहसत्, न्यक्कुर्वत्, अधरयत्।** दोषमधिक्षिपेत् (सुश्रुत० २।३३७।८)। **अधिक्षिपेत्, अपनयेत् पराकुर्यात्।** तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा (मनु० ४।१८५)। **अधिक्षिप्त आक्रुष्ट उपक्रुष्टोऽवज्ञातोऽवमानितः। अधिक्षिप्तः प्रणिहित इति मेदिनी।** अधिक्षिप्तः कृष्णशकुनिना (कौ० सू० ४४)। **अधिक्षिप्तोऽधः क्षिप्तः।** भवत्यधिक्षेप इवानुशासनम् (कि० १।२८)। **अधिक्षेपोऽवज्ञा तिरस्कारः।**

**—गण् (गण संख्याने)।** को वीर्याण्यधिगणयेत् सहस्रजिह्वः (भा० पु० ५।२५।१२)। **अधिगणयेद् अधिकं गणयेत्।**

**—गम् (गम्लृ गतौ)।** अधि वा अगन्न त्वभिपत्तुं शक्नुमः (श० ब्रा० ६।५।१।१६)। **अध्यगन्= अध्यगमन् प्राप्नुवन्।** गुणालयोप्यसन्मन्त्री नृपतिर्नाधिगम्यते (पञ्चत० १।४२८)। **नाधिगम्यते नाधिगम्यो भवति, अभिगम्यो न भवति, उपसर्पणीयो न भवतीत्यर्थः।** कच्चिन्मित्राणि भजते मित्रैर्वाप्यधिगम्यते (रा० ५।३३।४३)। **मित्रैः सन्निधिस्ते प्राप्यत इत्याह।** यथा खनन् खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रुषुरधिगच्छति (मनु० २।२१८)॥ **अधिगच्छति विन्दति, लभते।** यत्स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते (अथर्व० २।६।३)। **अधिगम्यते प्राप्यते।** अपि धन्वन्नपोधिगच्छेत् (श० ब्रा० १४।१।१।८)। **उक्तोऽर्थः।** अथ परा, यया तदक्षरमधिगम्यते (मुं० उ०)। **अधिगम्यतेऽवगम्यते।** विचिन्त्य नाधिगच्छामि गमनाय इतरस्य वा (भा० वन० २३८।७)। **नाधिगच्छामि न व्यवस्यामि नावधारयामि, न निश्चिनोमि।** वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च (याज्ञ० १।९९)। **अधिगच्छेत्, विद्यात्, विजानीयात्।** धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः (भ० शां० )। **अधिगतोऽधीतः।** किमित्येवं पृच्छस्यनधिगतरामायण इव (उत्तर० ६।३०)। **उक्तोऽर्थः।** अधिगतमखिलसखीभिरिदं तव वपुः (गी० गो० ११७)। **अधिगतं परिगतं परिक्षिप्तं परिवेष्टितम्।** तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि (उत्तर० २।३)। **अधिगन्तुं प्रतिपत्तुम् अवगन्तुं शिक्षितुं ग्रहीतुम्।** कार्यं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव (माल० १।९)। **अधिगन्तुं प्राप्तुम्, निर्वर्तयितुम्।** श्रेयांसि सर्वाण्यधिजग्मुषस्ते (रघु० ५।३४)। **प्राप्तवत इत्यर्थः।** न च कश्चिदप्यनधिगमनीयो नामास्त्यापदाम् (पञ्चत०)। **अनधिगमनीयोऽनुपगन्तव्यः, अनासाद्यः।** येनाक्षरसमाम्नायमधिगम्य महेश्वरात् (पा०शिक्षा)।